To Dr Satya Vrata &
Dr Mrs Usha Satya Vrata
with delight -
S B Velankar
— 31-8-87

गीर्वाणसुधा ४८

# नृत्यनाट्यशाकुन्तलम् ।

( कालिदासाधारेण )

रचयिता

संपादकः

श्री. भि. वेलणकर

देववाणीमन्दिरम् ।

मुंबई - ४०० ००४.

शकुन्तला-नृत्यनाट्यम् ।

गौरवोद्धारहाराय गुरुगर्वप्रहारिणे ।
गीर्वाणवाग्विहाराय हरये गुरवे नमः ॥

This ballet was conceived about 16 years back. I had even started on it and then I got lost in other preoccupations. At that time, the immediate cause was the success of the opera 'MEGHADOOTATTARAM'. To recreate Kalidasa was my objective. I am however, glad that it was not then written because instsead of an opera, it is coming out now as a ballet I have not used the previous lines composed, in this production.

Kalidasa writes so beautifully that it is ever a pleasure to peruse him again and again. And yet the present generation hardly hears of him, let alone read him. The preset composition, like Meghadootottaram, abounds in Kalidasa's wording. To present Kalidasa in his own words is the main aim.

Some changes were inevitable, the main change is, however, in my interpretation of the ending adopted by Kalidasa. It is quite possible that some fans of Kalidasa will not agree with me.

I am glad that people - Common people - have begun to be aware that Sanskrit is not only for Pandits and Scholars. Common Man also has a scope to enjoy its beauty. If my efforts give them this hope, this realisation, I ask for nothing more.

Shakuntala of Kalidas is famous all the would over. There is almost no country where it is not staged in some form or the other. In India it is perhaps losing its vogue-not beceause it dose not delight but Sanskrit is becoming more and more unread. Translations on the other hand, have failed to recreate the original beauty.

I have to be grateful to Several people who helped in the production of the book and the ballet-financially, artistically, laboriously, punctually. I thank all of them sincerely without mentioning names as that might leave some scope for injustice.

S. B. Velankar

Bombay
6-6-86

# नृत्यनाट्य–शकुन्तला ।

( कालिदासाधारेण )

अङ्कः १ ।

नान्दी

सूत्रधार :– श्रीनटराजपदे प्रणतम्
शकुन्तलाचरितं गीतम् ॥ ध्रु० ॥

कालिदास-कविवर-प्रणीतं
भूपति-दुष्यन्तेनाचरितं
व/ दैवगतिवृतं चित्रजीवितम् ॥

कविना नाट्ये यथाविष्कृतं
प्रेक्षध्वं भरतान्वयनाट्यं
प्रस्तुतनृत्यं सर्वनन्दितम् ॥

सहृदयसुजनाः शृणुतावहितं
नृत्यं नाट्यं गीतसंहितं
श्रीरामकवे रसिकसंमतम् ॥ १ ॥

२

सूत्रधार ;– घनकाननेऽयं मृगयाविहारी
शार्दूलहरिणान् स्वैरानुसारी ॥
दुष्यन्तनामा मघवत्सहायः
चिन्ताप्रहर्ता दुरितापहारी ॥

सैन्येन सहितो निजराजधानीं
स विहाय राजा भ्रमते इदानीम् ।
जानाति नासौ विगतस्पृहांस्तान्
प्रथमाश्रमस्थान् रथयानगामी ॥ २ ॥

पश्यत शरसंधानं मृगलक्ष्ये विहितं
धावन्तं तं च मृगं शरपतनाद् भीतम् ॥ ३ ॥

३

ऋषिकुमार :-आयुष्मन् भो राजन् आश्रमाश्रयो हरिणः ।
हन्तव्यो नैष कदा न भवानपि निष्करुणः ॥ ४ ॥

मृगोऽयं स्वाश्रमीयो भो न हन्तव्यो न हन्तव्यः
यदस्माभिः सदा यत्नै रक्षितोऽसौ हि मन्तव्यः ॥ ५ ॥

४

ऋषिकुमार :-वज्रसाराः शराः प्रखराः
न पातनीया मृगे प्रहाराः ॥ ५० ॥
आर्तत्राणे शस्त्रं भवतां
अमोघमेतन् ननु नियुज्यतां
प्रतिसंहरणं त्वत्र साध्यताम्
आश्रमे जना भवदाधाराः ॥ ६ ॥

५

दुष्यन्तः :- वचनं गृहीतं भवतो हि शिरसा
प्रतिसंहृतो मे शर एष सहसा ॥ ७ ॥

ऋषिकुमारः- पुरुवंशसदृशी वृत्तिस्तवैषा
चक्रवर्ती तनयं आशीस्त आस्ताम् ॥

मालिनीतीरगत आश्रमो दृश्यते
एष नः सद्गुरो ननु कण्वकुलपतेः ॥

भवतो न चेद् अन्यकार्यातिपातः
संत्कार आदीयतां नः समुचितः ॥ ८ ॥

दुष्यन्तः :– अपि कुलपतिर्वः संनिहित आश्रमे।
तस्य दर्शनसुखे प्रीतचित्तो रमे॥

ऋषिकुमार :–प्रतिकूलदैवं शमयितुं प्रस्थितः
सोमतीर्थं गुरुः प्राप्तचिन्तः॥
अतिथिसत्कृतिकृते स्थापयित्वा त्विमां
तीर्णबाल्यां सुतां तत्प्रियशकुन्तलाम्॥

दुष्यन्तः :– पश्येयमेनां श्रुत्वा समोक्तिं
कुर्यात् कुलपतेः मां विदितभक्तिम् ॥९॥

ऋषिकुमार :–राजन्! आश्रमवासी साधयाम्यहम्।
उपस्थितिः प्रतीक्षिता भवतः स्यात् प्रत्यहम्॥१०॥

६

दुष्यन्तः :– इदमाश्रमपदं शान्तमिति कीर्तितं
स्फुरितं तु बाहो निष्फलं स्यात् कथम्॥
सूचयेन्मंगलं भवितव्यता वा
नियतिपदवी तथा ह्यथ न विदितापि वा ॥११॥

७

(नेपथ्ये)

शकुन्तला :– अनसूये प्रियंवदे सख्यौ मे सुखदे
दत्तमिदं घटे जलं परिणिदध्वे वृक्षपदे ॥१२॥

८

दुष्यन्तः :– यदि जनस्य हि गहनवसतेः रूपमीदृग् दृश्यते॥
उपवनलता रूपनिभृता वनलताभिर्निर्जिता॥
तत् छाययाहं साधये ता इतः प्रतिपालये॥१३॥

९

अनसूया :- प्रियतरा वनद्रुमाः त्वत्तोऽपि च शकुन्तले
तातकाश्यपस्येमे निश्चयेन तर्कये ॥
कुसुमपेलवा भवती नियुक्तासि निर्दयं
आलवालपूरणे सोपले ननु स्थले ॥ १४ ॥

१०

शकुन्तला:- अनसूये प्रियंवदे कथमहं नियन्त्रिता ।
अतिपिनद्धवल्कलेन ? स्यामहं विमोचिता ॥
प्रियंवदा :- उपालभस्व यौवनं निजं न सखि तु वल्कलं
अनसूया :- विस्तारि-पयोधरं हि पीडया पुनस्त्वलम् ॥ १५ ॥

११

दुष्यन्तः :- सरसिजमनुविध्दं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥१६॥

१२

प्रियंवदा :- वीक्षेते नयने तरले। वनलतिकां ते शकुन्तले ॥ध्रु०॥
नवसुमनोयौवना सुन्दरा
संजाता मल्लिकात्र रुचिरा
वृक्षसंगता

अनसूया :- तत् किं बाले ॥

प्रियंवदा :- अनुरूपेण च सार्धं पतिना
स्यां तु कदा संगमिताऽनेना
प्रतीक्षते सा

अनसूया :- सखि ननु काले ॥ १७ ॥

१३

दुष्यन्तः :- क्षत्रियपरिणयनकृते संभूतेयं सुता ।
आर्यमानसं हि मे तदभिलाषि नान्यथा ॥
यदि वा सन्देहपदं मनुते सज्जनवृन्दं
प्रवृत्तिरन्तःकरणे प्रमाणमिह सर्वथा ॥ १८ ॥

१४

शकुन्तला :- अनसूये प्रियसखि मे सलिलसेकसंभृतः ।
लतां विहाय कुसुमितां मधुकरोऽभिवर्तितः ॥
सखि प्रियंवदे न्वसौ मदीयमाननं स्रुतः ।
निवार्यतां द्रुतं त्वया यथा गतो भवेदितः ॥ १९ ॥

१५

अनसूया :- दुष्यन्तमाक्रन्द रक्ष्यास्ति राज्ञा
तपसो धरित्री ! मा भूदवज्ञा ॥

प्रियंवदा :- आवां परित्रातुमेते न चालं
तन्मार्गयस्वात्र तं लोकपालम् ॥ २० ॥

१६

( पुर आगत्य )

दुष्यन्तः :- पौरवोऽत्र शासिता स्थापितः प्रजापिता ।
क इह मुग्धबालिकां तपोवने प्रतापिता ॥२१॥

१७

अनुसूया :- ननु मधुरालापजनिता
मनसि स्रुता सुतरामुत्सुकता ॥ २० ॥
राजर्षिकुलं किमलंक्रियते
तपोवने किं पदं न्यस्यते
विश्रम्भो मां मुखरीकुरुते
श्राव्यतां प्रभो भवतो वार्ता ॥ २२ ॥

दुष्यन्तः :– नात्मानं निवेदये न वापलापमारभे ।
किं करोमि कानने कथं विमोचनं लभे ॥

( प्रकाशं )

धर्माधिकृतौ नूनं पौरवेण भूपतिना ।
अव्याहतक्रतिसाध्ये स्थापितोस्मि निर्दम्भे ॥२३॥

( विरम्य )

पृच्छामो वयमपीह युवयोश्च सखीगतं
अनसूया :– आर्य ! अनुग्रह एतद् भवदीयं भाषितम ॥ २४ ॥

दुष्यन्तः :– ब्रह्मणि स्थितो विदितः काश्यपोऽत्र शाश्वते
जनकत्वं कन्यायाः कथमस्मिन् मान्यते ॥ २५ ॥

अनसूया :– प्रियसख्या राजर्षिः प्रभवः स हि कौशिकः
भरणपालनाच्च पुनः ऋषिः संमतो जनकः ॥
मेनका तथाप्सरा हि भवति च तस्या माता
दुष्यन्तः :– धरातलात्तु नैवैषा चन्द्रिकात्र समुदिता ॥ २६ ॥

प्रियंवदा :– संपन्ना यौवनमधुना
नैव वसेत् तरुणी सह तरुणा ॥ ध्रु० ॥
अनुरूपवरायैषा देया
तपोवनेषु च न रक्षणीया
मनसि संमतं सदैव गुरुणा ॥ २७ ॥

( नेपथ्ये )

तपस्विनो भोः संनिहिताः
तपोभूमि-रक्षणनिरताः ॥ ध्रु० ॥
धर्मारण्यं प्रविशति दुरितं
गजेन्द्ररूपं स्यन्दनभीतम् ।
सर्वैर्भाव्यं सततावहितं
मा भवत पुनः संभ्रान्ताः ॥ २८ ॥

( ताः निष्क्रममाणाः पश्यन्ति )

तपस्विनो भोः संनिहिताः तपोभूमि-रक्षणनिरताः
धर्मारण्यं प्रविशति दुरितं गजेन्द्ररूपं स्यन्दनभीतम्
सर्वैर्भाव्यं सततावहितं मा भवत पुनः संभ्रान्ताः ॥

दुष्यन्तः :- प्रयाति मे पुर इदं शरीरं
चेतो वियुतं विपरिगत्वरम् ॥
चीनांशुकमिव केतोर्नियतं
प्रतीपमयते तत्र निर्भरम् ॥ २९ ॥

१८

विदूषकः :- विजयस्व हि भो वयस्य जयतु भो भवान् ।
प्रसरन्ति न चरणकराः प्रभूतोऽस्मि भोः परवान् ॥

दुष्यन्तः :- गात्राणामुपघातः संभवति त्वयि कुतः ।
विदूषकः :- कथं कारणं पृच्छसि यत्र निमित्तं भवत. ॥
दुष्यन्तः :- कूटमिदं नावगतं विशदीकुरु मतमतः ॥

विदूषकः :- विडम्ब्यते वेतसेन कुब्जालीला हि यतः ।
स्वयंप्रभावेण कथय किमथ नदीवेगतः ॥

दुष्यन्तः :- कारणं नदीवेगो
विदूषकः :- निमित्तमिह त्वं हि ततः ॥
दुष्यन्तः :- कथमेवं वदसि त्वं
विदूषकः :- पश्य कुतो वदाम्यहम् ।
वनचरवृत्तिर्भ्राम्यसि राजकार्य-समुज्झिता ।
पशूत्सारणे सततं सकलं कालं क्षेप्ता ॥
विश्रममेकाहमेव लभेय यदि सुखं वसन्
(दृष्ट्वा) अरण्यरुदितं मा मे व्यर्थमस्म्यहं प्रलपन् ॥ ३० ॥

दुष्यन्तः :- नैव लब्धं नेत्रफलितं प्रेक्षणीया नेक्षिता ।
वञ्चितोऽसि, शकुन्तला न च रम्यमूर्तिनयनिता ॥ ३१ ॥

अनाघ्रातं पुष्पं किसलयमलूनं कररुहैः
अनाविद्धं रत्नं मधु नवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने कं देवं ललितवरणे योक्ष्यति विधिः ॥ ३२ ॥

१९

( नेपथ्ये )

निवेदिका :- दीर्घायुषाहं संभावनीया
आदिशति नूनं भवन्तं महार्या ।
समुपगतपारणो मदुपवासो यतः
भवदुपास्थितिरतो तत्रानिवार्या ॥ ३३ ॥

२०

ऋषिकुमारः-( प्रविश्य )
कण्वस्य महर्षेः अनुपास्थितिहेतोः
राक्षसैर्हि विघ्नाः निर्मीयन्ते ऋतोः ।
सनाथीक्रियन्ताम् आश्रमिणो भवता
कतिपयरात्रिकृते नः सफलास्त्वर्थिता ॥ ३४ ॥

२१

दुष्यन्तः .- तपस्विनामेतत्कार्यं परमवश्यमेकतः ।
तथा गुरुजनाज्ञा चैषा नोल्लङ्घ्या तथान्यतः ॥

विदूषकः :- त्रिशङ्कुरिव तिष्ठतु मध्ये भवानन्तराले
न स्वर्गे नापि धरायां वसतिस्ते नास्ति हि भाले।

दुष्यन्तः :- मतःपुत्र इति मन्मात्रा भवान् पुत्रकार्यं
प्रतिनिवृत्य विदधातु बरं प्रार्थनं त्वयाङ्गीकार्यं
आनुयात्रिकानपि सर्वान् प्रेषिष्ये सार्धं भवता।
परिहार्यो ननूपरोधः तपोवने यः संभविता

विदूषकः :- संवृत्तोऽहं युवराजो दृश्यतां ससैन्यः।

दुष्यन्तः :- तथा त्वया परिहर्तव्यः प्रमादोऽपि चान्यः ॥३५॥

दुष्यन्तः :- सह मृगैः संवर्धिता ! अज्ञमदना मुनिसुता ॥
जल्पितं परिहासितं न तु सखे परमार्थता ॥
सरलहृदयो द्विजवरस्त्वं न विदिता स्यान्नर्मिता ॥

विदूषकः :- अथ किम् ! सखे मे स्यात् कथं
विमतं कथा सा वान्यथा ॥
नगरं प्रपत्स्ये सकलं करिष्ये
स्यान्न कार्यै चोनता ।
ते न शंका सा हि लंका
स्मान्मया रघुजेन विजिता ॥ ४० ॥

२२

अनसूया :- संविभक्तं स्निग्धजने
सह्यवेदनं दुःखं भुवने ॥५०॥
कथमुपेक्षसे सखि ! आतङ्कं
अनुदिवसं खलु प्रहीनमङ्गं
लावण्यं न तु मुञ्चति सङ्गं
निवेदयतु भवती दमनें ॥ ४१ ॥

शकुन्तला :- दर्शनपथमागतो यदा सखि स तपोवनरक्षिता ॥
तद्गताभिलाषादहं
संवृत्ता ह्येतदवस्था स्वयं
तद् वर्तेथां स्थां यथा सत्वरं तेन हि अनुकम्पिता ॥

अनसूया :- दिष्ट्या तेऽभिनिवेशो वरः
सखि स हि पौरवकुलशेखरः
ननु उज्झित्वा सागरं कुत्र सा महानदी वाश्रिता ॥
संपादयेयमविलंबितं
सख्या हितं सुखमनोरथं
अपि तस्मिन् उद्भाविता मता
सखि अस्यामभिलाषिता ॥

प्रियंवदा :- चिन्त्यतां शब्दबन्धनं
ललितं प्रीतिपरं विरचनं
मा पुनर्वेपतां त्वदीयहृदयं विमुच्यतां भीरुता॥ ४२॥

२३

दुष्यन्तः :- त्वामवेक्षे चिरं संगमोत्सुकतया।
अवधीरणा ते न विशंकनीया॥
प्रार्थिता श्रीः कदा लभ्यते वा न वा
दुर्लभं कुत इतो वाञ्छितं यत्त्वया ॥ ४३॥

२४

शकुन्तला :- ( पठति ) तव न जाने हृदयं
कामो मे दिवानिशम्॥
निर्घृण तपति बलीयः
अङ्गानि मदनलिप्तानि ॥ ४४॥

२५

दुष्यन्तः :- करोमि पाणिग्रहणं बाले
निरन्तरं प्रीतिभृतं विमले।
हृदि धारय मा कामपि शंकां
दासो विजितः शकुन्तले॥ ४५॥

अनसूया :- भगवता मदनेन प्रिया सखी
विनिहिता तदिदं हि दशान्तरम्।
नृपतिभूरिपरिग्रहसंग्रहे
न तु शुचा समितास्तु शकुन्तला ॥ ४६॥

दुष्यन्तः :- यदि मदीयपरिग्रहभूरिता
द्वयमिदं तु कुले ननु दैवतम् ॥
उदधिसंयतभुः प्रथमा यथा
तदनुगा नियतं युवयोः सखी ॥ ४७ ॥

(सख्यौ निष्क्रान्ते ।)

२६

(अङ्गुलयिकं अङ्गुलौ स्थापयन्)

एकैकमत्र दिवसे दिवसे मदीयं
नामाक्षरं गणय गच्छसि यावदन्तम् ।
तावत्प्रिये मदवरोधगृहप्रवेशं
नेता जनस्तव समीपमुपैष्यतीति ॥ ४८ ॥

(निष्क्रान्तः ।)

२७

शकुन्तला :- पौरवो नृपतिः पतिर्मे वन्यकन्यायाः कथम्
मन्मथेन वृथा व्यथेयं कारितापि कथा कथम् ॥
नात्र संनिहितोऽपि तातो मां वदेत् किं निन्दितम्
किं कथं संभूतमखिलं नात्र जानाम्यद्भुतम ॥ ४९ ॥

२८

प्रणयिता मयि संगता
राजदर्शने या विदिता ॥
वहति तु वाते सुगन्धान्विता
भ्रमरं कर्षति सा कलिका ॥ ५० ॥

— समाप्तः प्रथमोऽङ्कः —

२

अङ्कः २।

(पुष्पाणि चिन्वत्यौ सख्यौ प्रविशतः ।)

२९

अनसूया :- भूपतिः सखि वृत्तमेतत् स्मरति कदाचिद् वा न वा।
समागतोऽयं महिषीवृन्दैः स्मृतिरन्या ननु असंभवा ॥

प्रियंवदा :- न तादृशाकृतिपुरुषविशेषाः गुणविरोधिनो दृश्यन्ते ।
जाने न पुनर्विदिते वृत्ते कथं तु तातो विशङ्कते ॥

अनसूया :- मनोरथः प्रथमो हि तदीयः सुता प्रदेया गुणवते ।
तत्सखि मन्ये स हि शकुन्तलां अभिनन्देन् नूनं घटिते ॥

प्रियंवदा :- अवचितानि सखि पर्याप्तानि च कुसुमानि मया गण्यते ।

अनसूया :- शकुन्तला सौभाग्यदेवता समर्चनीया -

प्रियंवदा :- - युज्यते ॥५१॥

(नेपथ्ये)

३०

दुर्वासाः :- विचिन्तयन्ती यमनन्यमानसा
तपोधनं वेत्सि न मामुपस्थितम् ।
स्मरिष्यति त्वां न स बोधितोऽपि सन्
कथां प्रमत्तः प्रथमं कृतामिव ॥ ५२ ॥

प्रियंवदा :- कस्मिन्नपि पूजार्हे अपराद्धा शकुन्तला ।

अनसूया :- दुर्वासा एव याति शप्त्वा तां हतबलाम् ॥
एतु सत्वरं भवती प्रपततु तत्पूज्यपदे
अर्घजलं कल्पयामि मा प्रयातु स क्रोधे ॥५३॥

(निष्क्रान्ता प्रियंवदा ।)

यात्येकतोऽस्तशिखरं पतिरोषधीनाम्
आविष्कृतारुणपुरःसर एकतोऽर्कः ।
तेजोद्वयस्य युगपद् व्यसनोदयाभ्यां
लोको नियम्यत इवात्मदशान्तरेषु ॥

३१

(तां अनुयान्ती)

अनुसूया :- प्रभ्रष्टं पुष्पभाजनम् ।
किं गहनं ननु दैवविघटनम् ॥ ध्रु० ॥

आवेगेन स्खलिता क्षणे
आपतितं दुरितं न च जाने
पाहि सखीं नौ, स्वीकुरु नमनम् ॥ ५४ ॥

३२

(प्रियंवदा प्रविशति ।)

किं भूतम् -

प्रियंवदा :- शक्यं चाश्वसितुम् ॥

वचनं न हि मे भवेदन्यथा
अभिज्ञानदर्शनेन तु तथा
शापान्मुक्तिर्भवेत् सर्वथा
स्थितो वदन् अन्तर्धातुम् ॥

अनसूया :- अस्ति तद्धि राजर्षिपिनद्धं
स्वनामधेयाङ्कितं विशुद्धं
अङ्गुलीयकं पुनःस्मरणदं
स्वाधीनोपाया भवितुम् ॥

द्वयोरेव नौ मुखे तिष्ठतात्
वृत्तान्तोऽसौ, रक्ष्या त्वसुखात्
सखी तु विमनाः ! को यायात्
उष्णजलैर्लतिकां सेक्तुम् ॥ ५५ ॥

३३

(नेपथ्ये)

यात्येकतोऽस्तशिखरं पतिरोषधीनां
आविष्कृतारुणपुरःसर एकतोऽर्कः ।
तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां
लोको नियम्यत इवात्मदशान्तरेषु ॥ ५६ ॥

३४

अनसूया :- अनार्थमाचरितम् । शकुन्तलायां अनुचितम् ।
राज्ञा तेनानपेक्षितम् ॥ ५६ ॥
किं करोमि प्रतिबुद्धा दुर्वासःशापविधा ।
परिणमते ननु कतिधा ।
न विसृष्टं ननु लिखितम् ॥ ५७ ॥

३५

( नेपथ्ये )

प्रविष्टस्याग्निशरणं छन्दोमयविदेहवाक् ।
निवेदितवती चैवं सद्गुरोर्घटितं तथा ॥ ५८ ॥
दुष्यन्तेनाहितं तेजो दधानां भूतये भुवः ।
अवेहि तनयां ब्रह्मन् अग्निगर्भां शमीमिव ॥ ५९ ॥

३६

प्रियंवदा :- दिष्ट्याहुतिः पतिताऽनले ननु
पूज्ययजमानस्य सा ।
धूमाकुलितदृष्टेर्वदति खलु
सद्गुरौ सा सालसा ॥
मुदितहृदया सत्रपा
लज्जावनतवदना स्थिता ।
राज्ञा वृता धन्या धृता
अभिनन्दिता मुनिना सुता ॥ ६० ॥

३७

( नेपथ्ये )

काश्यपः - यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया ।
कण्ठः स्तम्भितवाष्पवृत्तिकलुषः चिन्ताजडं दर्शनम् ॥
वैक्लव्यं मम तावदीदृशमिदं स्नेहादरण्यौकसः ।
पीडयन्ते गृहिणः कथं तु तनयाविश्लेषदुःखैर्नवैः ॥ ६१ ॥

( काश्यपः प्रविशति । )

३८

शकुन्तला:– ( प्रविश्य )
तात वन्दे परमविनता ।
तव शुभपदे समादरिता ॥
अनुभवविदे लज्जान्विता
चिरसंपदे विदिताथिता ॥ ६२ ॥

३९

काश्यप :– पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या ।
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ॥
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः ।
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥ ६३ ॥

( कोकिलरवः । )

४०

काश्यपः :– अनुमतगमना शकुन्तला
तरुभिरियं वनवासबन्धुभिः ।
परभृतविरुतं कलं यथा
प्रतिवचनीकृतमेभिरीदृशम् ॥ ६४ ॥

४१

शकुन्तला :– लताभगिनीं वनज्योत्स्नां
आमन्त्रये आम्रसंगाम् ।
इतोगताभिः शाखाकरैः
आलिंगतु मां लतिकासुषमा ॥ ६५ ॥

४२

काश्यपः :– संकल्पितं प्रथममेव मया तवार्थे
भर्तारमात्मसदृशं सुकृतैर्गता त्वम् ।
चूतेन संश्रितवती नवमालिकेयं
अस्यामहं त्वयि च संप्रति वीतचिन्तः ॥ ६६ ॥

४३

शकुन्तला :– यदा मृगवधूर्गर्भमन्थरा
अनघप्रसवा भवेत् सुस्थिरा ।
विसर्जयिष्यसि कमपि तात मे
विदितोदन्ता स्यां हि निर्भरा ॥ ६७ ॥

काश्यपः :– श्यामाकमुष्ट्या परिवर्धितोऽयं
न जहाति हरिणः पदवीमितस्ते ।
कुशाग्रसूचिविद्धे तैलं तदीये
व्रणिते हि वदने सिक्तं भवत्या ॥ ६८ ॥

४४

काश्यपः :– अस्मान् साधु विचिन्त्य संयमधनान् उच्चैः कुलं चात्मनः
त्वयि अस्याः कथमपि अबान्धवकृतां स्नेहप्रवृत्तिं च ताम् ॥
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्यायत्तमतःपरं न खलु तद् वाच्यं वधूबन्धुभिः ॥ ६९ ॥

४५

शकुन्तला :– तातस्याङ्कात् परिभ्रष्टा
मलयतटोन्मूलिता ॥
कथं धारये जीवितं हि मे
विहता चन्दनलता ॥ ७० ॥

४६

काश्यपः :– अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभिः कृत्यैस्तस्य प्रतिक्षणमाकुला ।
तनयमचिरात् प्राचीवार्कं प्रसूय च पावनं
मम विरहजां न त्वं वत्से शुचं गणयिष्यसि ॥ ७१ ॥

प्रियंवदा :– शून्यं तपोवन नूनं
शकुन्तलाविरहितं हि दीनम् ॥
प्रविशामि कथं ? नैतच्च् चरणं
प्रचलति ! समितं न कुतः शरणं
प्रस्थानमिदं तात ! असहनम् ॥ ७२ ॥

४७

#

काश्यपः – अर्थो हि कन्या परकीय एव
तामद्य संप्रेष्य परिग्रहीतुः ।
जातो ममायं विशदः प्रकामं
प्रत्यर्पितन्यास इवान्तरात्मा ॥ ७३ ॥

---

४८

दुष्यन्तः :– वीक्ष्य वस्तु रमणीयं मधुरशब्दकर्णने
उत्कण्ठा समुद्भवेद् अपि सुखिते सज्जने ॥
भावशाश्वतानि तदा संगतानि मानसे
जननान्तरसौहृदानि तत्र यान्ति तत्स्मरणे ॥ ७४ ॥

४९

( प्रविशन्ति पुरोहितः तपोवनस्थाश्च । )

पुरोहितः :– वर्णाश्रमाणाम् अविता हि राजा
प्रतिपालयति वो मुक्तासनोऽयम् ।
देव ! सुतपस्विनो वनभुव उपेताः
विधिवत्कृतार्चाः श्रोतुमर्हति भवान् ॥ ॥ ७५ ॥

५०

ऋषिकुमारः :–भवन्ति नम्रास्तरवः फलागमैः
नवाम्बुभिर्दूरविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषा समृद्धिभिः
स्वभाव एवैष परोपकारिणाम् ॥ ७६ ॥

५१

दुष्यन्तः :- अवगुण्ठनवती कथं तु वनिता
न तु परिस्फुटितवर- देहगतचारुता ।
निर्वर्णनीया न परस्य कान्ता
तैरपि स्यात् तथा स्वस्थितिर्विशदिता ॥ ७७ ॥

५२

ऋषिकुमारः:-स्मृतोऽसि प्राग्रसंरस्त्वमर्हतां
शकुन्तला सत्क्रिया च मूर्ता ।
समानयन् तुल्यगुणौ च दंपती
चिरस्य वाच्यं न गतो विधाता ॥ ७८ ॥

अस्मद्गुरुराह-

सहधर्मचरणाय प्रतिगृह्यतां या
दुहिता ममेयं आपन्नसत्त्वा ।
युवयोरनुज्ञा मयास्ति प्रदत्ता
पाणिग्रहो यद् विहितोऽपि भवता ॥ ७९ ॥

दुष्यन्तः :- किमिदमद्भुतं भवता भो उपन्यस्यते ।
स्वल्पमपि न चैतस्मात् मया स्मर्यते ॥
नाम पौरवाणामेतत् संमतं जनानां
तत्र किल्बिषं किमपि न कदा दृश्यते ॥ ८० ॥

ऋषिकुमारः:-भवन्तो लोकनिष्णाता सर्वथा ज्ञातवृत्तान्ताः ॥
रोचते न सुजनाय कदा सनाथा ज्ञातिसदनस्था ।
समीपे वाञ्छिता भर्तुः अतस्तैर्बान्धवैर्दुहिता ॥
प्रिया सा यदि भवेत् तेषां वरं यत् वरगृहे न्युषिता ॥ ८१ ॥

दुष्यन्तः :- अत्रभवती मया न गृहीतपूर्वा
नोचेत् स्मृतिर्मे न हि स्यात् कथं वा ।
रूपं च रुचिरं ननु मामुपेतं
ममेदं न जाने ! कथा नैव सत्या ॥ ८२ ॥

५३

शकुन्तला :– पुराश्रमपदे तथा पौरव रे वदता
प्रतार्य संप्रति प्रत्याख्याता ॥
व्यवसितमेतत् न हि परिणीता
कीदृगवस्थां अहमानीता ॥ ८३ ॥

यदि ते परपरिणयशंकिता
अनेन शंका स्यादपनीता ।
अङ्गुलीयकेनाभिज्ञाता.
(दृष्ट्वा) अहह ! तु दैवेन घातिता ॥ ८४ ॥

दुष्यन्तः :– ननु मधुभिश्चानृतवचनैः
विषयिण आकृष्टाः प्रलोभनैः ।

गौतमी :– नार्हसि मन्त्रयितुं नृप एवं
वर्धित एष जनस्तपोवनैः ।
शचीतीर्थसलिलं हि वन्दितं
अङ्गुलीयकं जले निपतितम् ।
अनृतभाषणैः किं समर्जितं
तपोधनैर्न किमभिलषितम् ॥ ८५ ॥

दुष्यन्तः :– तापसवृद्धे किमुच्यते ॥
अशिक्षितपटुत्वं नारीणां
न दृश्यते केवलमनुजानां
द्विजैः परभृतैः स्वापत्यानां
पोषणमन्यैर्द्विजैः साध्यते ॥ ८६ ॥

शकुन्तला :– अनार्य ! भूपस्त्रिव प्रेक्षसे
निजहृदयानुमतं हि मन्यसे ।
तवानुकरणं कः प्रपत्स्यते
तृणच्छन्नकूपोपम आस्से ॥ ८७ ॥

दुष्यन्तः :– सन्दिग्धबुद्धिं मां कुर्वन्
अकैतवः कोपो हि लक्ष्यते ।
चरितं दुष्यन्तस्य प्रथितं
तत्रेदं न कुतोऽपि दृश्यते ॥ ८८ ॥

ऋषिकुमार::- अनधीतशास्त्रा आजन्मनो या
तस्या वचो न प्रमाणं जनस्य ।
स सत्यवक्ता तु कथं प्रमाणं
येनातिसंधानमधीतमत्र ॥ ८९ ॥

दुष्यन्त: :- अतिसंधायैतां लभ्यते किं तु मया

ऋषिकुमार::- विनिपात: ! विनिपात: ! ते वृत्त्या ह्यनया ॥ ९० ॥
तदियं भवत: कान्तानीता
गृण्हातु भवान् मुञ्चतु वा ।
स्मृता सर्वथा पत्यु: प्रभुता
सदैव संसारे भार्यायाम ॥ ९१ ॥

साधयामो वयं त्वं निवस पतिकुले
स्थानं हि तत्ते विहितं शकुन्तले ।
नाधर्मभीरु: भवान् भूमिपाल
विस्मरसि निजकीर्ति या पूर्वकाले ॥ ९२ ॥

( निष्क्रान्ता: । )

दुष्यन्त: :- पुरोहित ! आदिश मामधुना
मूढोऽहं वा वितथा ललना ।
पुरोहित :- जायेत चक्रवर्तिसुतो यदि
स्वीकार: स्याव् भार्यासंपदि ॥ ९३ ॥
शकुन्तला :- भगवति वसुधे प्रदेहि शरणं
पुरोहित :- अनुयाहि च ! मा वत्से रुदनम् ॥ ९४ ॥

५४ ( निष्क्रान्तौ । )

( नेपथ्ये )

सा निन्दन्ती स्वानि भाग्यानि बाला
बाहूत्क्षेपं क्रान्दितुं च प्रवृत्ता ।
स्त्रीसंस्थानं चाप्सरस्तीर्थमारात्
उत्क्षिप्यैनां ज्योतिरेकं जगाम ॥ ॥ ९५ ॥

-समाप्त: द्वितीयोऽङ्क: ।-

अङ्कः ३।

५५

दुष्यन्तः :- ( अङ्गुलीयकं पश्यन् )
अङ्गुलीय सुचरित ते
दुर्भाग्यं विभाव्यते ॥ ९० ॥

अरुणनखमनोहरासु
लब्धपदं अंगुलीषु
च्युतमतः कुतस्त्वमाशु
कथमिदमनुभाव्यते ॥ ९६ ॥

विदूषकः :- अङ्गुलीयकमेव चिन्हं
भाविमिलने साधनम् ।
नाममुद्रायास्तु कस्मात
शाकुन्तलया प्रापणम् ॥ ९७ ॥

दुष्यन्तः :- विज्ञापितोऽहं निर्गमे मे
प्रियया कदा स्यात् मेलनम् ।
स्वांगुलीयं मया ददता
साधितं चाश्वासनम् ॥ ९८ ॥

किं न भवता स्मारितोऽहं
रे वयस्य तदोचिते ।
सा यदा समिता पुरासीत
वनपदान् नगरे तते ॥ ९९ ॥

विदूषकः – जल्पितं तव त्वया गदितं
सर्वथा परिहासतः ।
तन्मतं मे मन्दमतिना
अवितथं ननु सर्वतः ॥ १०० ॥

विदूषकः :- तव करे कथमङ्गुलीयं
रे वयस्य पुनर्जितम् ।
दुष्यन्तः :- जालजीवितधीवरेण हि
मत्स्यदेहादुद्धृतम् ॥ १०१ ॥

विदूषकः :- केन ननु सा नभसि नीता
विस्मयास्पदतां गता ।
दुष्यन्तः :- मेनका तस्या हि माता
रे वयस्य मया श्रुता ॥
तस्याः सखीभिः प्रायशो
मन्ये प्रिया मे हारिता ॥ १०२ ॥

५६

( आकाशे )

महाराज दुष्यन्त देवेन्द्रदासः
त्वां मातलिः प्रार्थयेऽहं प्रणम्य ।
भवान् इन्द्रराजेन आकारितोस्ति
सुरमनुजशत्रून् दनुजान् निहन्तुम् ॥
रथमैन्द्रमारुह्य प्रस्थीयतां भोः
विजयाय राजन् ननु आत्तशस्त्रः ॥ १०३ ॥

५७

( आकाशे )

शैलानां अवरोहतीव शिखरात् उन्मज्जतां मेदिनी ।
पर्णाभ्यन्तरलीनतां विजहति स्कन्धोदयात् पादपाः ॥
संतानैस्तनुभावनष्टसलिला व्यक्तिं भजन्त्यापगाः ।
केनापि उत्क्षिपतेव पश्य भुवनं पार्श्वे च आनीयते ॥ १०४ ॥

हेमकूटः पर्वतोऽयं
पूर्वपश्चिमजलधिगाहः ।
तस्य शिखरे मारीचनामा
सुरदनुजगुरुरेव तपसि स्थितोऽस्ति ॥ १०५ ॥

दुष्यन्तः :- नोल्लङ्घ्यमेतत् श्रेयःपदं यत्
प्रदक्षिणीकृत्य यातुं समीहे ।
सुखस्थानमेतत् स्वर्गाधिकतरं
धर्माभिषेकक्रिया यत्र विहिताः ॥ १०६ ॥

( नेपथ्ये )

मा खलु कुरुष्व बालक रे
चापलं ननु चापलम् ।
गत एव कथं प्रकृतिमात्मनो
रोध्यते कथं कुतो बध्यते ॥ १०७ ॥

दुष्यन्तः :- तपस्विनीभ्यामनुबध्यमानः
अबालसत्त्वः कुतः कुमारः ।
अभूमिरेषा उद्धतवृत्तेः
समुद्धतचरो बालस्तु कोऽयम् ॥ १०८ ॥

आलक्ष्यदन्तमुकुलान् अनिमित्तहासैः
अव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।
अङ्काश्रयप्रणयिनः तनयान् वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥ १०९ ॥

तापसी :- पश्येः शकुन्त-लावण्यं
बाल :- कुत्र मे मातृदेवता ।
तापसी :- नामसादृश्यतो नूनं
वञ्चितो मातृवत्सलः ॥ ११० ॥

तापसी :- न हि मणिबन्धे दृश्यते
अहो नु रक्षाकरण्डकं ते ।
दुष्यन्तः :- सिंहविमर्शात् विपरिभ्रष्टम्
ननु तद् युवयोरिदं दीयते ॥ १११ ॥

तापसी :– मावलम्ब्यतां

कथं गृहीतम्

दुष्यन्तः – प्रतिषिद्धाः स्मो वयं किमर्थम् ॥ ११२ ॥

तापसी :– एषौषधिर्नो दत्ता भगवता
प्रजाताय चास्मै अपराजिता ॥
नादीयते केन तस्य पितरौ विना
भूमौ निपतिता तेन वा सा विना ॥ ११३ ॥

दुष्यन्तः :– अथ स यदि गृण्हाति

तापसी :– तं दशति नागः ।

तापसी :– निवेदयावः शकुन्तलायै
वृत्तान्तमिमं वृतव्रतायै ।
करण्डकः केनापि गृहीतः
न पुनः पुरुषः किमपि पीडितः ॥ ११४ ॥

६२

दुष्यन्तः :– नाभिनन्दामि किं पूरितं वाञ्छितम् ।
नियतिना क्रीडितं मे हितं साधितम् ॥
प्रियसुतं मेलिता
प्रियतमामर्जिता
मेलने ननु पुनः मे मनः कम्पितम् ॥ ११५ ॥

६३

शकुन्तला :– ( प्रविश्य )
भागधेयचेष्टितं न चावेक्षितं
सानुमतीनिवेदितं ननु वा घटितम् ॥
विकृतिसमयप्रकृतिस्थां
श्रुत्वौषधिमृतकथां
किं भूतं किं च भावि न मयापि हि अनुमितम् ॥११६॥

६४

दुष्यन्तः :– अपैतु ते हृदयाद् व्यलीकं
प्रत्यादेशाद् यद् व्युदितम् ॥
प्रबलात् तमसः कलुषितं मनः
दुर्वासःशापात् अयं जनः
मूढो जातः ! संप्रति तु पुनः
प्रिये याचते क्षमां अन्तिकम् ॥ ११७ ॥

६५

शकुन्तला:– शापहेतोर्यदि तदानीं
दुरितसंभव एधिता ।
तत्क्षमावसरो न्विदानीं
आर्यपुत्र ! न वर्तिता ॥ ११८ ॥

६६

दुष्यन्तः :– करोतु वन्दनं सती
पादयोर्मुनेरतः ।
सत्वरं सदारकं
गन्तव्यं यन् न्वितः ॥ ११९ ॥

( निष्क्रान्तः। )

६७

शकुन्तला :– यामि वा न यामि वा पतिगृहं धरातले ।
कंधरा तवोन्नता ! नावनता शकुन्तले ! ॥
पुरावधीरिताऽवसं
नन्दिताधुनाऽभवं
एतस्मिन् जगति पुनः यामि कथं चञ्चले ॥
सुतो भावियुवराजः
कालेन हि अधिराजः
कर्तव्यं मातुर्मे, अपरिहार्यमिदमबले ॥

सुतस्य विनयाधानं
न हि राज्ञा संधानं
मया राजधानीं ननु यातव्यं भुवनतले ॥
देव देहि मे बलं
कर्तव्यार्थं यद्लं
न च महिषी! मातेयं प्रणता त्वच्चरणतले! ॥१२०॥

मारीचः – त्वदीयभर्ता शक्रकल्पः
त्वदीयतनयो जयन्तरूपः ।
नाशीरन्या तव प्रदेया
भव पौलोमीसदृशी सदया ॥ १२१ ॥

शकुन्तला:– एहि तनय भरतभुवं
अवेक्षते सेवेयं
जनतायास्त्वां सनयम् ॥ ५७० ॥
अहमस्मि च ते माता
तव विनये सुनिश्चिता
कथमहं रमेय पुनः तपोवने! न क्षम्यम् ॥
( सर्वैः आगत्य )

स्वर्गादपि भूमाता
सर्वेषां अधिकमता
सर्वदा हि संचरेम साधयितुं तत्प्रियम् ॥ १२२ ॥

इति तृतीयोऽङ्कः ।

— इति नृत्यनाट्यशकुन्तला —

***

## Some notes

1. I have styled myself as composer–Editor since I have used Kalidasa's original verses at 16, 44, 48, 52, 56, 59, 61, 63, 64, 66, 71, 73, 75, 94, 103, 108 and vere 32 for the first three lines – Thus a total of about 65 lines out of a total of about 570 lines. Kalidasa's expressions, in addition abound in the text That is–The Raison de etre – of the composition.

2. The original work of kalidasa is divided into Seven Acts. For this ballet, his first Three Acts have been combinad into Act I, his Acts 4 & 5 into Act II and his Acts 6 & 7 into Act III.

3. The tunes–Ragas and Talas–used have not been indicated in print.

4. Sandhis have been generally observed though not always In speaking (Singing) liberties have been taken.

5. There are a number of places where the script dliffers from singing E. g. on p. 10 the first lines are shown as spoken by Priyamvada. In the ballet, Shakuntala sings them as चिन्तये शब्दबधन्नं, ललितं प्रीतिपरं विरचनं, मा पुनर्वेपता मदीयहृदयं मनसो मा भीरुता । or on P 7/Line 8 is sung by दुष्यन्त as —

   गाचाणामुपघाताः संभवन्ति ते · कुतः । Also in Verse 64 L 2 इयं L. 4 कृतं is not Sung and प्रतिवचनी Vecomes प्रतिवचनं.

   There are quite a few instances of such Veriations.

6. Every page has three types of numbering —
   a) Page Number at the top corner
   b) Small numbers in the centre–these are Music Sections
   c) Bold at the end of the lines–these are different sequence of conversations; Not necerrarily slokas, songs or lines.

7. Detailed Stage directions for actor–Dancers have not been recorded.

8. CORRECTIONS —

Read दैवगति० for दैप० on P 1 line 9

„ तवैषा „ तवषा P 2 „ 16

„ सङ्गं „ सङ्ग in Verse 41 line 5

„ तरुभिरियं for the misprint „ 64 „ 2

9. In setting the music I have been assisted by – Sou Susheela Pohonkar, Sou Asha Khadilkar, Shri Kale, Kum Uttara Kulkarni, Kum Anjali Thakurdesai, Shri M, Y. Joshi, Shri Chandrachud, Shri Panshikar, Smt Panshikar, Smt. Usha Deshpande, Shri Balasaheb Tikekar, Smt. Sumati Tikekar, Shri Ramesh Modak, Kum Alka Khatu, Smt. Charuta Velanker Shri Balsekar, Shri Makarand Kundale, Kum. Sagarika Godbole, Kum. Aruna Zarapkar and others. I am indebted to them.

11-6-86

— S. B. Velankar

# नृत्यनाट्यशाकुन्तला ।

Shri S. B. Velankar has written and produced several Sanskrit plays in different dimensions. There are opereas and one Act plays; historical and mythological plays. Redio plays and Television plays. Sanskrit has not been wielded so brillianty and powerfully by

श्री. भि. वेलणकर

any one so far. Now we present his second ballet based on SHAKUNTALA giving a new interpretation to Kalidasa's Masterpiece. This is Velankar's 54th Composition, 48th in Sanskrit.

देववाणीमन्दिरम् ।
मुंबई–४०० ००४.